आद्या कालिकादेव्याः शतनामस्तोत्रम्
कालिकाशतनामस्तोत्रम्
॥ श्रीगणेशाय नमः ॥

॥ श्रीउमामहेश्वराभ्यां नमः ॥

श्रीसदाशिव उवाच ॥

शृणु देवि जगद्वन्द्ये स्तोत्रमेतदनुत्तमम् ।
पठनात् श्रवणाद्यस्य सर्वसिद्धीश्वरो भवेत् ॥ १॥

असौभाग्यप्रशमनं सुखसम्पद्विवर्धनम् ।
अकालमृत्युहरणं सर्वापद्विनिवारणम् ॥ २॥

श्रीमदाद्याकालिकायाः सुखसान्निध्यकारणम् ।
स्तवस्यास्य प्रसादेन त्रिपुरारिरहं शिवे ॥ ३॥

स्तोत्रस्यास्य ऋषिर्देवि सदाशिव उदाहृतः ।
छन्दोऽनुष्टुब्देवताऽऽद्या कालिका परिकीर्त्तिता ।
धर्मकामार्थमोक्षेषु विनियोगः प्रकीर्त्तितः ॥ ४॥

ॐ अस्य श्रीआद्याकालिकाशतनामस्तोत्रमन्त्रस्य श्रीसदाशिवऋषिः ।
अनुष्टुप्छन्दः । श्री आद्याकालिका देवता ।
धर्मकामार्थमोक्ष सिध्यर्थे जपे विनियोगः ॥

ह्रीँ काली श्रीँ कराली च क्रीँ कल्याणी कलावती ।
कमला कलिदर्पघ्नी कपर्दीशकृपान्विता ॥ ५॥

कालिका कालमाता च कालानलसमद्युतिः ।
कपर्दिनी करालास्या करुणामृतसागरा ॥ ६॥

कृपामयी कृपाधारा कृपापारा कृपागमा ।
कृशानुः कपिला कृष्णा कृष्णानन्दविवर्द्धिनी ॥ ७॥

कालरात्रिः कामरूपा कामपाशविमोचनी ।
कादम्बिनी कलाधारा कलिकल्मषनाशिनी ॥ ८॥

कुमारीपूजनप्रीता कुमारीपूजकालया ।

कुमारीभोजनानन्दा कुमारीरूपधारिणी ॥ ९॥

कदम्बवनसञ्चारा कदम्बवनवासिनी ।
कदम्बपुष्पसन्तोषा कदम्बपुष्पमालिनी ॥ १०॥

किशोरी कलकण्ठा च कलनादनिनादिनी ।
कादम्बरीपानरता तथा कादम्बरीप्रिया ॥ ११॥

कपालपात्रनिरता कङ्कालमाल्यधारिणी ।
कमलासनसन्तुष्टा कमलासनवासिनी ॥ १२॥

कमलालयमध्यस्था कमलामोदमोदिनी ।
कलहंसगतिः क्लैब्यनाशिनी कामरूपिणी ॥ १३॥

कामरूपकृतावासा कामपीठविलासिनी ।
कमनीया कल्पलता कमनीयविभूषणा ॥ १४॥

कमनीयगुणाराध्या कोमलाङ्गी कृशोदरी ।
कारणामृतसन्तोषा कारणानन्दसिद्धिदा ॥ १५॥

कारणानन्दजापेष्टा कारणार्चनहर्षिता ।
कारणार्णवसम्मग्ना कारणव्रतपालिनी ॥ १६॥

कस्तूरीसौरभामोदा कस्तूरितिलकोज्ज्वला ।
कस्तूरीपूजनरता कस्तूरीपूजकप्रिया ॥ १७॥

कस्तूरीदाहजननी कस्तूरीमृगतोषिणी ।
कस्तूरीभोजनप्रीता कर्पूरामोदमोदिता ॥ १८॥

कर्पूरमालाभरणा कर्पूरचन्दनोक्षिता ।
कर्पूरकारणाह्लादा कर्पूरामृतपायिनी ॥ १९॥

कर्पूरसागरस्नाता कर्पूरसागरालया ।
कूर्चबीजजपप्रीता कूर्चजापपरायणा ॥ २०॥

कुलीना कौलिकाराध्या कौलिकप्रियकारिणी ।
कुलाचारा कौतुकिनी कुलमार्गप्रदर्शिनी ॥ २१॥

काशीश्वरी कष्टहर्त्री काशीशवरदायिनी ।
काशीश्वरकृतामोदा काशीश्वरमनोरमा ॥ २२॥

कलमञ्जीरचरणा क्वणत्काञ्चीविभूषणा ।
काञ्चनाद्रिकृतागारा काञ्चनाचलकौमुदी ॥ २३॥

कामबीजजपानन्दा कामबीजस्वरूपिणी ।
कुमतिघ्नी कुलीनार्त्तिनाशिनी कुलकामिनी ॥ २४॥

क्रीँ ह्रीँ श्रीँ मन्त्रवर्णेन कालकण्टकघातिनी ।
इत्याद्याकालिकादेव्याः शतनाम प्रकीर्त्तितम् ॥ २५॥

ककारकूटघटितं कालीरूपस्वरूपकम् ।
पूजाकाले पठेद्यस्तु कालिकाकृतमानसः ॥ २६॥

मन्त्रसिद्धिर्भवेदाशु तस्य काली प्रसीदति ।
बुद्धिं विद्याञ्च लभते गुरोरादेशमात्रतः ॥ २७॥

धनवान् कीर्त्तिमान् भूयाद्दानशीलो दयान्वितः ।
पुत्रपौत्रसुखैश्वर्यैर्मोदते साधको भुवि ॥ २८॥

भौमावास्यानिशाभागे मपञ्चकसमन्वितः ।
पूजयित्वा महाकालीमाद्यां त्रिभुवनेश्वरीम् ॥ २९॥

पठित्वा शतनामानि साक्षात् कालीमयो भवेत् ।
नासाध्यं विद्यते तस्य त्रिषु लोकेषु किञ्चन ॥ ३०॥

विद्यायां वाक्पतिः साक्षात् धने धनपतिर्भवेत् ।
समुद्र इव गाम्भीर्ये बले च पवनोपमः ॥ ३१॥

तिग्मांशुरिव दुष्प्रेक्ष्यः शशिवत् शुभदर्शनः ।
रूपे मूर्त्तिधरः कामो योषितां हृदयङ्गमः ॥ ३२॥

सर्वत्र जयमाप्नोति स्तवस्यास्य प्रसादतः ।
यं यं कामं पुरस्कृत्य स्तोत्रमेतदुदीरयेत् ॥ ३३॥

तं तं काममवाप्नोति श्रीमदाद्याप्रसादतः ।
रणे राजकुले द्यूते विवादे प्राणसङ्कटे ॥ ३४॥

दस्युग्रस्ते ग्रामदाहे सिंहव्याघ्रावृते तथा ।
अरण्ये प्रान्तरे दुर्गे ग्रहराजभयेऽपि वा ॥ ३५॥

ज्वरदाहे चिरव्याधौ महारोगादिसङ्कुले ।
बालग्रहादिरोगे च तथा दुःस्वप्नदर्शने ॥ ३६॥

दुस्तरे सलिले वापि पोते वातविपद्गते ।
विचिन्त्य परमां मायामाद्यां कालीं परात्पराम् ॥ ३७॥

यः पठेच्छतनामानि दृढभक्तिसमन्वितः ।
सर्वापद्भ्यो विमुच्येत देवि सत्यं न संशयः ॥ ३८॥

न पापेभ्यो भयं तस्य न रोगेभ्यो भयं क्वचित् ।
सर्वत्र विजयस्तस्य न कुत्रापि पराभवः ॥ ३९॥

तस्य दर्शनमात्रेण पलायन्ते विपद्गणाः ।
स वक्ता सर्वशास्त्राणां स भोक्ता सर्वसम्पदाम् ॥ ४०॥

स कर्त्ता जातिधर्माणां ज्ञातीनां प्रभुरेव सः ।
वाणी तस्य वसेद्वक्त्रे कमला निश्चला गृहे ॥ ४१॥

तन्नाम्ना मानवाः सर्वे प्रणमन्ति ससम्भ्रमाः ।
दृष्ट्या तस्य तृणायन्ते ह्यणिमाद्यष्टसिद्धयः ॥ ४२॥

आद्याकालीस्वरूपाख्यं शतनाम प्रकीर्तितम् ।
अष्टोत्तरशतावृत्त्या पुरश्चर्याऽस्य गीयते ॥ ४३॥

पुरस्क्रियान्वितं स्तोत्रं सर्वाभीष्टफलप्रदम् ।
शतनामस्तुतिमिमामाद्याकालीस्वरूपिणीम् ॥ ४४॥

पठेद्वा पाठयेद्वापि शृणुयाच्छ्रावयेदपि ।
सर्वपापविनिर्मुक्तो ब्रह्मसायुज्यमाप्नुयात् ॥ ४५॥